[अवधिज्ञान एव प्रवृत्तिनिमित्तवशेन दर्शनशब्दस्यापि लब्धावकाशत्वसमर्थनम् ]

एवमवधिदर्शनस्याप्यभावः स्यादित्याह—

जं अप्पुट्ठा भावा ओहिण्णाणस्स होंति पच्चक्खा ।
तम्हा ओहिण्णाणे दंसणसद्दो वि उवउत्तो ॥ २९ ॥

यस्मादस्पृष्टा भावा अण्वादयोऽवधिज्ञानस्य प्रत्यक्षा भवन्ति चक्षुर्दर्शनस्येव रूपसामान्यम् ततस्तत्रैव दर्शनशब्दोऽप्युपयुक्तः ॥ २९ ॥

---

[ सिद्धान्तिना एकस्यैव केवलोपयोगस्य ज्ञानदर्शनोपयोगद्वयरूपत्वव्यावर्णनम् ]

केवलावबोधस्तु ज्ञानदर्शनोपयोगद्वयात्मको ज्ञानमेव सन् दर्शनमप्युच्यत इत्याह—

जं[1] अप्पुट्ठे भावे जाणइ पासइ य केवली णियमा ।
तम्हा तं णाणं दंसणं च अविसेसओ सिद्धं ॥ ३० ॥

यतोऽस्पृष्टान् भावान्नियमेनावश्यंतया केवली चक्षुष्मानिव पुरःस्थितं चक्षुषा पश्यति जानाति चोभयप्राधान्येन । तस्मात् तत् केवलावबोधस्वरूपं ज्ञानमप्युच्यते दर्शनमप्यविशेषत उभयाभिधाननिमित्तस्याविशेषात् न पुनर्ज्ञानमेव सदविशेषतोऽभेदतो दर्शनमिति सिद्धम् । यतो न ज्ञानमात्रमेव तत् नापि दर्शनमात्रं केवलम् नाप्युभयाक्रमरूपं परस्परविविक्तम् नापि क्रमस्वभावम् अपि तु ज्ञानदर्शनात्मकमेकं प्रमाणमन्यथोक्तवत् तदभावप्रसङ्गात् ।

[ सूर्यभिप्रायेण ज्ञानपञ्चक-दर्शनचतुष्कयोः स्वरूपविभजनम् ]

छद्मस्थावस्थायां तु प्रमाणप्रमेययोः सामान्यविशेषात्मकत्वेऽप्यनपगतावरणस्यात्मनो दर्शनोपयोगसमये ज्ञानोपयोगस्यासम्भवाद् अप्राप्यकारिनयन-मनःप्रभवार्थावग्रहादिमतिज्ञानोपयोगप्राक्तनी अवस्था अस्प(स्पृ)ष्टावभासिग्राह्यग्राहकत्वपरिणत्यवस्था व्यवस्थितात्मप्रबोधरूपा चक्षुरचक्षुर्दर्शनव्यपदेशमासादयति । द्रव्यभावेन्द्रियालोकमतिज्ञानावरणकर्मक्षयोपशमादिसामग्रीप्रभवरूपादिविषयग्रहणपरिणतिश्चात्मनोऽवग्रहादिरूपा मतिज्ञानशब्दवाच्यतामश्नुते । श्रुतज्ञानावरणकर्मक्षयोपशमवाक्यश्रवणादिसामग्रीविशेषनिमित्तप्रादुर्भूतो वाक्यार्थग्रहणपरिणतिस्वभावो वाक्यश्रवणानिमित्तो वा आत्मनः श्रुतज्ञानमिति शब्दाभिधेयतामाप्नोति । रूपिद्रव्यग्रहणपरिणतिविशेषस्तु जीवस्य भवगुणप्रत्ययावधिज्ञानावरणकर्मक्षयोपशमप्रादुर्भूतो लोचनादिबाह्यनिमित्तनिरपेक्षः अवधिज्ञानमिति व्यपदिश्यते तज्ज्ञैः अवधिदर्शनावरणकर्मक्षयोपशमप्रादुर्भूतस्तु स एव तद्द्रव्यसामान्यपर्यालोचनस्वभावोऽवधिदर्शनव्यपदेशभाग् भवति । अर्धतृतीयद्वीपसमुद्रान्तर्वर्तिसकलमनोविकल्पग्रहणपरिणतिर्मनःपर्यायज्ञानावरणकर्मक्षयोपशमादिविशिष्टसामग्रीसमुत्पादिता चक्षुरादिकरणनिरपेक्षस्यात्मनः मनःपर्यायज्ञानमिति वदन्ति विद्वांसः । छाद्मस्थिकोपयोगं चात्मा स्वप्रदेशावरणक्षयोपशमद्वारेण प्रतिपद्यते

---

१ प्रस्तुतगाथासंवादकमेकं पद्यं मलधारिहेमचन्द्रसूरिणा स्वकीयायां विशेषावश्यकभाष्यवृत्तौ स्तुतिकारकर्तृकत्वेन समुद्धृतं वर्तते । तद्यथा—

"यदपि केवलज्ञानं केवलदर्शनं च तस्योच्यते तत्रापि तयोर्न विशेष इत्यभिप्रायवता प्रोक्तं स्तुतिकारेण
एवं कल्पितभेदमप्रतिहतं सर्वज्ञतालाञ्छनं सर्वेषां तमसां निहन्तृ जगतामालोकनं शाश्वतम् ।
नित्यं पश्यति बुध्यते च युगपद् नानाविधानि प्रभो ! स्थित्युत्पत्तिविनाशवन्ति विमलद्रव्याणि ते केवलम्" ॥
—पृ० ११९८ पं० १० ।

यद्यपि इदं पद्यं लभ्यासु एकविंशतौ सिद्धसेनीयद्वात्रिंशिकासु न दृश्यते तथापि तत् सिद्धसेनप्रणीतमेवाऽवसीयते समन्तभद्रवत् तस्यैव स्तुतिकारत्वेन प्रसिद्धत्वात् तस्यैव अभिन्नकेवलज्ञानदर्शनोपयोगद्वयमतप्रस्थापकत्वेन विश्रुतत्वाच्च ।

२-मात्र के-भां० मां० हा० । ३-पाच्चक्षु-वृ० हा० वि० ।

न त्वनन्तज्ञेयज्ञानस्वभावस्यात्मन एतदेव खण्डशः प्र
कवस्तुविस्तरव्यापि युगपत्परिच्छेदस्वभावद्वयात्मकै
स्वरूपं केवलज्ञानदर्शनावरणकर्मक्षयाविर्भूतं करण
लस्वभावपरिणामभेदानन्तपदार्थयुगपत्सामान्यविशे
च व्यपदिश्यते । तेन 'अवग्रहरूप आभिनिबोधो
तद्व्यतिरिक्तस्यापरस्य ग्राहकस्याभावात् तस्यैवैकस्य
सर्पद्रव्यवत् ततस्तयोरवस्थयोरव्यतिरेकात् तस्य
चाभिधीयत इति सूत्रकृतोऽभिप्रायः' इति यत् कै
युक्तिविरोधाच्च न ह्येकान्ततोऽभेदे पूर्वमवग्रहो द
शक्यमभिधातुम् कथंचिद्भेदनिबन्धनत्वादस्य
न चैकस्यैव मतिज्ञानस्योभयमभ्युपातादुभयव्य
पर्यन्तं मतिज्ञानम्' इत्यस्य व्याहतेः तस्य वाऽ ... वस्य
आगमविरोधश्च तद्व्यतिरेकेण दर्शनानभ्युपग ... तिज्ञानव्यतिरिक्त-
दर्शनाभ्युपगमात् कुतो ज्ञानमेव दर्शनं छद्मस्था ... णावरणस्याऽऽत्मनो
नित्योपयुक्तत्वात् सदैव दर्शनावस्था वर्तमानप ... ः प्राक् तथाभूतानवबोध-
रूपत्वासंभवात् तथाभूतज्ञानविकलावस्थासंभ ... पुरुषाविशेषप्रसङ्गात् । ततो युगपज्ज्ञा-
नदर्शनोपयोगद्वयात्मकैकोपयोगरूपः केवलावबोधोऽभ्युपगन्तव्य इति सूरेरभिप्रायः ॥ ३० ॥

---

[ एक एव केवलोपयोगो द्व्यात्मक इति स्वसिद्धान्तः समयान्तरोत्पादवचनं तु परतीर्थिकमतकथनमिति विभजनम् ]

द्व्यात्मक एक एव केवलावबोध इति दर्शयन्नाह—

साई अपज्जवसियं ति दो वि ते ससमयओ हवइ एवं ।
परतित्थियवत्तव्वं च एगसमयंतरुप्पाओ ॥ ३१ ॥

द्वे अपि ते ज्ञानदर्शने यदि युगपद् न नाना भवतस्तदा स्वसमयः स्वसिद्धान्तः 'साद्यपर्यवसिते' इति घटते यस्त्वेकसमयान्तरोत्पादस्तयोः 'यदा जानाति तदा न पश्यति' इत्येवमभिधीयते स परतीर्थिकशास्त्रं नार्हद्वचनम् नयाभिप्रायेण प्रवृत्तत्वादिति सूरेरभिप्रायः ॥ ३१ ॥

---

[ एवंभूततत्त्वश्रद्धानरूपस्य सम्यग्दर्शनस्य सम्यग्ज्ञानरूपत्वमेव इति वर्णनम् ]

एवंभूतं वस्तुतत्त्वं श्रद्दधानः सम्यग्ज्ञानवानेव पुरुषः सम्यग्दृष्टिरित्याह—

एवं जिणपण्णत्ते सद्दहमाणस्स भावओ भावे ।
पुरिसस्साभिणिबोहे दंसणसद्दो हवइ जुत्तो ॥ ३२ ॥

एवमनन्तरोक्तविधिना जिनप्रज्ञप्तान् भावान् श्रद्दधानस्य पुरुषस्य यदाभिनिबोधिकं ज्ञानं तदेवं सम्यग्दर्शनम् विशिष्टावबोधरूपाया रुचेः सम्यग्दर्शनशब्दवाच्यत्वादि भावः ॥ ३२ ॥

---

१–र्थिकरू–हा० वि० । २–नानति–वृ० सं० । ३ एवेहा–भां० मां० विना । ४–स्थयोर्व्यति–
५ दर्शनत्वेन अ–वा० बा० । दर्शने अ–वृ० । ६–पर्यन्त म–वृ० वा० बा० मां० विना । ७ पृ० ६१७ गा० २१ पं० २६ । ८–गमे वाष्टा–वृ० ।

ज्ञानस्य विकल्पनीयतया सम्यग्दर्शनं
ज्ञलिताभिधानम् ]

नेऽपि कश्चिल्लक्षणे सम्यग्ज्ञानं किमिति ?

णे उ भयणिज्जं ।
होइ उववण्णं ॥ ३३ ॥

ने पुनर्भजनीयं विकल्पनीयं सम्यग्ज्ञान
समस्ति । यतश्चैवमतः सम्यग्ज्ञानं चेत
सामर्थ्यादुपपन्नं भवति ॥ ३३ ॥

[ सूत्रानु ... चिदाचार्याणां गर्विष्ठतया सम्यग्वादि-
त्वम् ]

अत्र सा ... पर्यवसितं केवलज्ञानं सू ... ज्ञानं च तथाभूतस्य तस्य प्रतिपादकं संभ
वति । तथाहि—घातिकर्मचतुष्टयप्रक्षयाविर्भूतत्वात् केवलं सादि न च तस्योत्पन्नस्य पश्चात्तस्यावरण
मस्ति अतोऽनन्तमिति न पुनरुत्पद्यते विनाशपूर्वकत्वादुत्पादस्य न हि घटस्याविनाशे कपालानामु
पादो दृष्ट इत्यनुत्पादव्ययात्मकं केवलमित्यभ्युपगमवतो निराकर्तुमाह—

केवलणाणं साई अपज्जवसियं ति दाइयं सुत्ते ।
तत्तियमित्तोत्तूणा केइ विसेसं ण इच्छंति ॥ ३४ ॥

केवलज्ञानं साद्यपर्यवसितमिति दर्शितं सूत्रे इत्येतावन्मात्रेण गर्विताः केचन
शेषं पर्यायं पर्यवसितत्वस्वभावं विद्यमानमपि नेच्छंति ते न च सम्यग्वादिनः ॥ ३४ ॥

---

[ सिद्धान्तिना केवलस्य पर्यवसितत्वप्रदर्शनम् ]



यतः—

जे संघयणाईया भवत्थकेवलिविसेसपज्जाया ।
ते सिज्झमाणसमये ण होंति विगयं तओ होइ ॥ ३५ ॥

ये वज्रऋषभनाराचसंहननादयो भवस्थस्य केवलिनः आत्मपुद्गलप्रदेशयोरन्योन्यानुवे
व्यवस्थितेः विशेषपर्यायास्ते सिध्यत्समयेऽपगच्छन्ति तदपगमे तदव्यतिरिक्तस्य
ज्ञानस्याप्यात्मद्रव्यद्वारेण विगमात् अन्यथाऽवस्थातुरवस्थानामात्यन्तिकभेदप्रसक्तेः केवलज्ञानं
विगतं भवतीति सूत्रकृतोऽभिप्रायः ॥ ३५ ॥

---

-स्य प्रति-बृ० आ० हा० वि० । २-यमेत्तो- बृ० आ० हा० वि० । ३-मित्तोत्तणा आ० ।-मित्ते-
० ।-मित्तोपूणा हा० । 'उत्तूण' शब्दो हस्तवाची देश्यः । "दरिए उत्तुण-उम्मुह-उक्कुंचु-च्छुच्छु-उत्तुरिद्धीओ"—
प्रथ० व० गा० ९९ पृ० ४१ ।